# गणेश कवचम्

*गणेश पुराण*

एषोति चपलो दैत्यान् बाल्येपि नाषयत्यहो ।
अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ॥ १ ॥

दैत्या नानाविधा दुष्टाः साधु देवद्रुमः खलाः ।
अतोस्य कन्ठे किंचित्त्यं रक्षां संबद्धुमर्हसि ॥ २ ॥

ध्यायेत् सिंहगतं विनायकममुं दिग्बाहु माद्ये युगे
त्रेतायां तु मयूर वाहनममुं षड्बाहुकं सिद्धिदम् ॥ ३ ॥

ईद्वापरेतु गजाननं युगभुजं रक्तान्गरागं विभुम् तुर्ये ।
तु द्विभुजं सितान्ग रुचिरं सर्वार्थदं सर्वदा ॥ ४ ॥

विनायकः शिखांपातु परमात्मा परात्परः ।
अतिसुन्दर कायस्तु मस्तकं सुमहोत्कटः ॥ ५ ॥

ललाटं कष्यपः पातु भ्रूयुगं तु महोदरः ।
नयने बालचन्द्रस्तु गजास्यस्त्योष्ठ पल्लवौ ॥ ६ ॥

जिह्वां पातु गजक्रीडः चुबुकं गिरिजासुतः ।
वाचं विनायकः पातु दन्तान् रक्षतु दुर्मुखः ॥ ७ ॥

श्रवणौ पाशपाणिस्तु नासिकां चिन्तितार्थदः ।
गणेशस्तु मुखं पातु कन्ठं पातु गणाधिपः ॥ ८ ॥

स्कन्धौ पातु गजस्कन्धः स्तने विघ्नविनाशनः ।
हृदयं गणनाथस्तु हेरंबो जठरं महान् ॥ ९ ॥

धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः ।
लिन्गं गुह्यं सदा पातु वक्रतुन्डो महाबलः ॥ १० ॥

गजक्रीडो जानु जन्घो ऊरू मन्गाळकीर्तिमान् ।
एकदन्तो महाबुद्धिः पादौ गुल्फौ सदावतु ॥ ११ ॥

क्षिप्र प्रसादनो बाहु पाणी आशाप्रपूरकः ।
अन्गुळीश्च नखान् पातु पद्महस्तो अरिनाशनः ॥ १२ ॥

सर्वान्गानि मयूरेशो विश्वव्यापी सदावतु ।
अनुक्तमपि यत् स्थानं धूमकेतुः सदावतु ॥ १३ ॥

आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोवतु ।
प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः ॥ १४ ॥

दक्षिणस्यां उमापुत्रो नैऋत्यां तु गणेश्वरः ।
प्रतीच्यां विघ्नहर्ता व्याह्वायव्यां गजकर्णकः ॥ १५ ॥

कौबेर्यां निधिपः पायादीशान्याविशनन्दनः ।
दिवाव्यादेकदन्तः तु रात्रौ सन्ध्यासु यःविघ्नहृत् ॥ १६ ॥

राक्षसासुर बेताळ ग्रह भूत पिशाचतः ।
पाशान्कुशधरः पातु रजः सत्त्व तमः स्मृतीः ॥ १७ ॥

ज्ञानं धर्मं च लक्ष्मी च लज्जां कीर्तिं तथा कुलम् ।
ईवपुः धनं च धान्यं च गृहं दाराः सुतान्सखीन् ॥ १८ ॥

सर्वायुध धरः पौत्रान् मयूरेशो वतात् सदा ।
कपिलो जानुकं पातु गजाश्वान् विकटोवतु ॥ १९ ॥

भूर्जपत्रे लिखित्वेदं यः कन्ठे धारयेत् सुधीः ।
न भयं जायते तस्य यक्ष रक्षः पिशाचतः ॥ २० ॥

त्रिसन्ध्यं जपते यस्तु वज्रसार तनुर्भवेत् ।
यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत् ॥ २१ ॥

युद्धकाले पठेद्यस्तु विजयं चाप्नुयाद्ध्रुवम् ।
मारणोच्चाटनाकर्ष स्तंभ मोहन कर्मणि ॥ २२ ॥

सप्तवारं जपेत् एतद् नामं एकविंशतिः ।
तत्तत् फलमवाप्नोति साधको नात्र संशयः ॥ २३ ॥

एकविंशतिवारं च पठेत्तावत् दिनानि यः ।
कारागृहगतं सद्यो राज्ञावध्यं च मोचयोत् ॥ २४ ॥

राजदर्शन वेळायां पठेत् एतत् त्रिवारतः ।
स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत् ॥ २५ ॥

इदं गणेश कवचं कश्यपेन सविरचितम् ।
मुद्गलाय च ते नाथ मान्डव्याय महर्षये ॥ २६ ॥

मह्यं स प्राह कृपया कवचं सर्व सिद्धिदम् ।
न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ॥ २७ ॥

अनेनास्य कृता रक्षा न बाधास्य भवेत् व्याचित् ।
राक्षसासुर बेताळ दैत्य दानव संभवाः ॥ २८ ॥

॥ इति श्री गणेशपुराणे श्री गणेश कवचं संपूर्णम् ॥